# VI

## ADDITIONAL VERSES AND PASSAGES

Tagged to the Colophon of different Manuscripts by the Scribes

MS. A:—

ब्राह्मणानां सहस्रेषु सत्रयाजी विशिष्यते ।
सत्रयाजिसहस्रेषु सर्ववेदान्तपारगः ॥
सर्ववेदान्तवित्कोट्यां विष्णुभक्तो विशिष्यते ।
विष्णुभक्तसहस्रेषु चैकान्तिको विशिष्यते ॥

सेवारामदासेन

यदासनविधावेव ग्रहौ १६६६ शके ।
व्यलेखि बहुयत्नेन ग्रन्थोऽयं सारसङ्ग्रहः ॥

MS. B:—

ब्राह्मणानां सहस्रेषु सत्रयाजी विशिष्यते ।
सत्रयाजिसहस्रेषु सर्ववेदान्तपारगः ॥
सर्ववेदान्तवित्कोट्यां विष्णुभक्तो विशिष्यते ।
विष्णुभक्तसहस्रेषु चैकान्तिको विशिष्यते ॥

MS. C:—

शकाब्दाः १६३३ । पुस्तकमिदं द्विजकुलोद्भवस्य श्रीकृष्णप्रसादघोषालस्य डुमरु-माख्यनिवासिना श्रीगोविन्दरामदेवशर्मणा लिखितम् ।

शकस्याङ्करामाग्निरसेन्दुवर्षेऽलिखद्रामगोविन्दशर्मातिहर्षे ।
मासे तपस्ये शशिसूनुवारे पक्षेऽसिते चापि तिथौ नवम्याम् ॥
देशेऽत्र दाक्षीणकुञ्जान्तराले चैतन्यपादद्वयवारिजाले ।
भूदेवसद्वैष्णवचित्तवृत्तेः पाठाय भिक्षाकरशान्तमूर्त्तेः ॥
गोपभूपभुवि साम्प्रतं नवग्रामवासिवसुधादिवौकसः ।
कृष्णरामतनयस्य दोर्भवा सम्बभूव लिपिराशुहर्षदा ॥

यत्नेन लिखितं ग्रन्थं यश्चोरयति मूढधीः ।
माता च शूकरी तस्य पिता तस्य च गर्दभः ॥

श्रीकृष्णचैतन्यचन्द्राय नमः ।

कृष्णो देवः कलियुगभुवं लोकमालोक्य सर्वं
पापासक्तं समजनि कृपासिन्धुचैतन्यमूर्तिः ।
तस्मिन् येषां न भवति सदा कृष्णबुद्धिर्नराणां
धिक्कान्धिक्कान्धिगिति धिगहो कीर्तनस्थो मृदङ्गः ॥

श्रीरूपरघुनाथयोश्चरणसरसिजेषु ममास्तु रतिः ।

MS. D: —

गोपेशौ पितरौ तवाचलधर श्रीराधिका प्रेयसी
श्रीदामा सुवलादयश्च सुहृदो नीलाम्बरः पूर्वजः ।
वेणुर्वाद्यमलङ्कृतिः शिखिदलं नन्दीश्वरो मन्दिरं
वृन्दाटव्यपि निष्कुटः परमितो जानामि नान्यत् प्रभो ॥
रसोऽस्ति रसिकोऽप्यस्ति नास्ति तत्र रसाश्रयः ।
रसः परवशश्चैव यः परः पर एव सः ॥
ब्राह्मणानां सहस्रेषु सत्रयाजी विशिष्यते ।
सत्रयाजिसहस्रेषु सर्ववेदान्तपारगः ॥
सर्ववेदान्तवित्कोट्यां विष्णुभक्तो विशिष्यते ।
विष्णुभक्तसहस्रेषु चैकान्तिको विशिष्यते ॥
श्रीलगोविन्ददासेन चन्द्रपत्तस्थकौ (?) शके ।
वारेऽलेखीषसौरे वै ग्रन्थोऽयं सारसङ्ग्रहः ॥
श्रीरूपकविराजस्य पादाब्जे मम मज्जतु ।
चित्तं मेऽस्य कृपाहेतो रागमार्गफलं कुतः ॥
कृष्णवल्लभगोस्वामिपादं वन्दे मुहुर्मुहुः ।
यस्य कृपा कुलं मां हि रघ्वनुगं नयेद्गुरोः ॥
श्रीरघुरामगोस्वामिचरित्रमसकृद्भजे ।
यस्य श्रवणतो विज्ञो वैधीमार्गं सदा त्यजेत् ॥
निमचरणगोस्वामिचरित्रं परमाद्भुतम् ।
यच्छ्राता भुवने ख्याता मयका सेव्यते स ह ॥

तेषु तत्प्रिय एकश्च वाञ्छाराममहामतिः ।
गोस्वामिकृतशास्त्रेषु ख्यातस्तैर्भुवने मतः ॥
तत्कथने फलं किञ्च तत्किञ्चिद्वर्ण्यते मया ।
मद्विधह्लादनिष्पत्तिस्तच्छ्रद्धालाभासमात्रतः ॥
वाञ्छारामप्रभुं वन्दे गङ्गावासनिवासिनम् ।
स्फूर्तिमेने तु कार्यार्थो यत्कृपाभारत्या हृदि ॥
व्रजलोकानुसारेण वाञ्छारामपदं लभे ।
यस्य स्मरणमात्रेण विमतं याति संक्षयम् ।
श्रीजगन्नाथगोस्वामी मत्स्वाम्येकगुरुः प्रभुः ।
भज्यते यन्निदेशेन गङ्गावासस्थितौ रतिः ॥
श्रीलगौरकिशोरस्य चरणाय नमोऽस्तु मे ।
प्रवृत्तिः परमा ग्रन्थऽस्मिन्नभूद् यन्निदेशतः ॥
श्रीरूपकविराजेन कृतग्रन्थार्थ एव सः ।
मनो रे स्वाद्यतां नित्यं नात्र कालविचारणा ॥
यज्ज्ञानेन व्रजप्राप्तिः साधुभिर्निश्चयीकृता ।
व्रजदेवीस्वकीयात्वं खण्डितं स्याच्च तेन वै ।
तासान्तु परकीयात्वं स्थापितञ्च हि सन्ततम् ।
कृष्णस्य ह्यौपपत्यञ्च दृढीकृतं मुदा किल ॥
गीयतां गीयतां नित्यं सारसंग्रहपुस्तकम् ।
भाव्यतां भाव्यतां भक्ताः स्वाद्यतां स्वाद्यतां सदा ॥

———